र्नवा मृगैः शौर्यविजृम्भितं हरेः ।
नभःप्लुतिं नो मशकैर्गरुत्मतो
रवेर्न खद्योतकैर्हृतां भरम् ॥ ३१ ॥

नगैर्न गाङ्ग्यगिरेर्यथोच्चतां
जलाशयैर्नो जलधेरगाधताम् ।
द्रुमैः प्रभावं न च कल्पशाखिनो
न दुर्गतैः श्रीस्फुरितं च चक्रिणः ॥३२॥

यथा न भूतैर्ललितं सुरेशितु-
र्न तीर्थिकैस्तीर्थकृतोऽर्थदेशनाम् ।
समग्रविद्याविदुरैर्न नो गुरो-
स्तथाऽनुकर्त्तुं चरितं प्रगल्भ्यते ॥ ३३ ॥

ततो मुधा गर्जसि गर्वपर्वतो
मन्यामहे त्वां न तृणाय दुर्मते ।
अस्मद्गुरोर्मन्त्रसमीरणोद्धुतो
न तूलकल्पः स्थिरतां प्रयास्यसि ॥३४॥

मृगस्य सिंहस्तमसश्च भानुमा-
नसिर्मृणालस्य तृणस्य चाऽनलः ।

अहेर्गरुत्मानिव लीलयाऽप्यलं
तवापहर्तुं मद्जीवितं गुरुः ३५ ॥
निशम्य योगीति रुषा स लब्धा
जान्वायतस्थूलरदास्यभीष्मम् ।
विधाय रूपं विकृतं जिघत्सु-
रिवाभ्यधावच्चलयन् भुवं तान् ॥३६॥
मुमुक्षवस्तद्ददपातसूचिनीं
कफोणिमुद्भूर्य पलाय्य च द्रुतम् ।
सकम्पगात्रास्तरलेक्षणा भया-
द्गुरुं वसत्यां शरणं प्रपेदिरे ॥ ३७ ॥
मा भैष्ट मा भैष्ट कुतो नु वो भयं
मयि प्रभौ त्रातरि हे विनेयकाः ।
इतीरिता श्रीगुरुणाथ संभ्रमा-
दाश्वस्य वृत्तं मुनयोऽपि तज्जगुः ॥३८॥
यावत्तदाकर्ण्य करोति रोषतो
भ्रुवं ललाटप्रणयोद्धुतां गुरुः ।
तावत्प्रदोषे विचकार दूरगो-

प्यहो सयोगीह विभीषिका इमाः ॥३९॥

तथाहि ।

स्फारैः स्फूत्कारवारै-

र्भरितसुरपथा भूमिपीठे समन्ता-

द्भीष्मा भोगीन्द्रभाराः

फणमणिकिरणैर्द्योतिताशाः प्रसस्रुः ।

शालान्तः पुस्तकाद्यो-

पकरणवलकस्तम्भमुख्याऽखिलार्थान्

खादन्तो वज्रतुण्डा-

भयदपृथुवपुर्मूषकाश्चोपरिष्टात् ॥ ४० ॥

फेत्कारान् स्फोरयन्तो

बहिरथ वसतेश्चण्डफेरण्डसङ्घा

वल्गन्मार्जारवाराः

पृथुरदवदनामण्डलाश्चाप्यसङ्ख्या ।

दृष्ट्वा तान् भीभरेणो-

त्तरलितनयनाः कम्प्रगात्रा न नष्टुं

स्थातुं वा ऽशक्नुवन्तो

निजगुरुमवदन् पाहिपाहीति शिष्याः॥४१॥
त्रातायं वोऽस्मि विश्व-
प्रकटमहिमभृद्भैष्ट मा भैष्ट मा भो
आश्वास्यैवं विनेयान्
गुरुरपि विगतक्षोभशङ्कः सदापि ।
यावद्ध्यानावलम्बी जपति
जयकरं सिद्धमन्त्रं स तावत्
सर्प्पाद्याः क्वापि जग्मुः
प्रमुदितमनसः साधवश्चाप्यभूवन् ॥४२॥
योगी सोप्युग्रबन्धै-
रविषयिविषयैर्हा म्रियेरे म्रियेरे
शिष्या बद्धाखिलाङ्गः
कुरुतकुरुत भोः कांश्चनाऽऽशूपचारान् ।
आस्तावद् यत्नसिद्धा
अपिहि विफलतां भेजिरे चेटकाद्याः
सर्वे मन्त्राश्च दैवं
धिगहह किमभूद्धीरियं मे ऽधुनाऽघैः ॥ ४३॥

क्रन्दन्नित्युग्रकष्टः

सकलपुरजनैर्दृश्यमानो विमानो

धावद्भिर्व्याकुलैः स्वै-

र्निखिलपरिजनैश्चापि हाहारवाढ्यैः ।

आकृष्टो जैनमन्त्रैः

स्मृतिमपि गमितैश्चेटकाद्यैरशक्य-

स्त्रातुं व्योम्ना समागा

द्गुरुपदकमलोपान्तमानम्रमौलिः ॥ ४४ ॥

उवाच योगी भगवन् दयानिधे

ऽपराधमेकं मम मर्षयाधुना ।

विमुञ्च मामेष पतामि पादयो-

र्नवो विरुद्धं विदधे ह्यतः परम् ॥४५॥

जगुर्जनाश्चापि न धर्त्तुमर्हसि

प्रभो प्रकोपं प्रणते दयास्पदे ।

व्यधादथ स्वक्रमरेणुना गुरुः

शमी स्वभावस्थमिमं लसद्दयः ॥ ४६ ॥

त्वं शङ्करः सर्वजनेष्टकर्त्ता

ब्रह्मा त्वमेवाखिलब्रह्मनिष्ठः ।
त्वमेव सत्यं पुरुषोत्तमोऽसि
त्वमेव बुद्धः सकलार्थवेदिन् ॥ ४७ ॥
अबुद्धतत्वस्य मुधाऽभिमानिनो
ममासि बुद्धः सुचिराज्जगद्गुरुः ।
त्वदीयपादाऽब्जरजोऽणुनाऽपि चे-
त्तुलां लभे तर्हि भजे कृतार्थताम् ॥४८॥
समग्रविद्याविभवात्मकस्य ते
पुरोऽणवत्येष सुसिद्धिभागपि ।
बिभर्त्ति यस्माल्लघिमानमुच्चकैः
पुरः सुमेरोर्निखिलोऽपि भूधरः ॥४९॥
इति स्वनिन्दामुखरः सविस्मयः
सुभक्तिभाक् सर्वजनस्य पश्यतः ।
स्तुवन्मुदाऽऽनम्य गुरुं सहानुगै-
र्जगाम विद्वान् स्वपदं स योगिराट् ॥५०॥
अहो जयत्याऽऽर्हतशासनं प्रभु-
र्गुरुः स यस्येदृशशक्तिमानयम् ।

इति स्तुवन्तो ऽपि जना यथागतं
गता व्यहार्षीद् गुरुरप्यथाऽन्यतः ॥५१॥

दष्टोऽन्यदाऽथ स गुरुः फणिना विषेण
मूर्छन्नुपायविधुरं निशि सङ्घमूचे ।
प्रातः समेष्यति लता विषहृत् प्रतोल्यां
पुंमौलिकाष्ठभरबन्धनकृद्विशुद्धा ॥५२॥

देयास्तु दंशवदने मम तां प्रघृष्ये-
त्येवं च तेन विहिते पटिमानमाप्तः ।
संत्यक्तसर्वविकृतिर्भगवांस्तदादि
चक्रे जिनप्रवचनोन्नतिमुग्रतेजाः ॥५३॥

तत्कीर्त्त्या धवलाद्वयेऽपि भुवने त्रैधे कृते शङ्करे
दुर्लक्षे विहिते हिमाद्रितनयाचेतस्तदाऽतूतुषत् ।
नोगाङ्गं सलिलं विधुर्न न वृषो नैवापि चक्षुःश्रवः
स्वामी किन्तु गरोविनीलितगलाङ्काविर्भवन्नृत्तकः ५४॥

चित्राणि सिद्धान्तपथानुगानि
स्तोत्राणि सङ्घाचरणं च शास्त्रम् ।
इत्याद्यनर्घ्याकृतिरस्य कस्या-

ज्ञानज्वरच्छेदमहौषधी न ॥ ५५ ॥

यः स्वर्गमापत्तुरगेषुविश्व

मितेऽ१३५७ब्दके विक्रमतः क्षितीन्द्रात् ।

श्रीधर्मघोषः कृतपुण्यपोषः

स रातु सङ्घाय विभुः सुखानि ॥ ५६ ॥

तदीयपट्टाम्बरभासनोद्यतः

सोमप्रभः सूरिवरो ४८ बभूव सः ।

यो दीयमानां गुरुणाऽपि न ग्रही-

च्चारित्रशुद्ध्यै किल मन्त्रपुस्तिकाम् ॥ ५७ ॥

ये मोदन्ते कृपणमतयः क्लेशभाजो धनाढ्यैः

शास्त्रैर्वादिद्विपमदहरैश्चाप्यधीतैः कियद्भिः ।

प्राप्ताभिर्वा लघिमवशिताकर्षमुख्यर्द्धिभिर्ये

सर्वे साम्यामृतरसभुजस्तेऽनुकम्प्या हि तस्य ॥ ५८ ॥

भास्वान् सच्चरणश्रिया विशदया विश्वोत्तरप्रोल्लस-

च्चातुर्वैद्यरमाविलासनिलयः श्रीचित्रकूटाचले ।

कृत्वाऽऽशु द्विजराजमण्डलमसौ छन्नप्रभं गोभरैः

सर्पद्दर्पमजीजनज्जिनमतानन्तप्रकाशोदयम् ॥ ५९ ॥

तथाहि ।

शर्वशैलशिखरोपरिस्फुर-
 च्चन्द्रमौलिमुकुटेन्दुरश्मिभिः ।
पूरिते सरसि मानसेऽभितः
 कैरवाणि विकसन्ति वासरे ॥ ६० ॥

विना विचारस्खलनेन शीघ्र-
 मेतत्समस्यापदपूरणेन ।
साहित्यवादे विजितद्विजौघः
 श्रीचित्रकूटे शमबोधयत्नः ॥ ६१ ॥

सर्वाङ्गपाठी निखिलागमार्थान्
 विनापि वृत्त्यादि हि सोऽययादत् ।
केऽप्यन्यके नैपुणधारिणोऽपि
 विद्यासु सर्वास्वपि नाततादत् ॥ ६२ ॥

श्रुतातिशायी पुरि भीमपल्ल्यां
 वर्षासु चाद्येऽपि हि कार्त्तिकेऽसौ ।
अगात् प्रतिक्रम्य विबुध्य भावि
 भङ्गं परैकादशसूर्यबुद्धम् ॥ ६३ ॥

भक्तेष्वपि श्रावकपुङ्गवेषु
    ममत्वमुत्केवलसंयमार्थी ।
शुद्धाम्बलाभाम्बुविराधनाभ्यां
    सोऽमूमुचत् स्वैर्मरुकुङ्कुणेर्याम् ॥ ६४ ॥
यतिजीतकल्पयत्रा-
    खिलादिजैनेन्द्रसंस्तुतिप्रमुखा ।
विपुलमतेस्तस्य कृति-
    र्हरते हृदयानि विबुधानाम् ॥ ६५ ॥
दिग्विश्ववर्षे १३१० जननं कृपाणि-
    विश्वं १३२१ व्रतं प्राप्य रदाग्निचन्द्रे १३३२ ।
पदप्रतिष्ठां च गुरुर्जगाम
    त्रिसप्तविश्वे १३७३ च स देवधाम ॥६६॥
ददात्वसौ मञ्जुलमङ्गलालीं
    जगत्पवित्रीकरणाभिधानः ।
श्रुतासु यद्धर्म्यकथास्वपीह
    भवेत्सतां साम्यरसानुभूतिः ॥ ६७ ॥
चत्वारस्तस्य गुरोः

शिष्याः ख्यातेः पदं च सकलदिक्षु ।
आसन् जिनपतिशासन-
सौधोद्धाराय तु स्तम्भाः ॥ ६८ ॥
श्रीमानिहाद्यो विमलप्रभो ऽभवत्
प्रबोधलब्ध्योद्धृतवान् दयाम्बुधिः ।
स्वदेशनावाणिगुणान् वितत्य यो
मिथ्यात्वकूपाद्गृहिणां शतत्रयम् ॥६९॥
श्रीमत्परमानन्दः परमानन्दप्रदः स्वमूर्त्त्यापि ।
गुरुरद्वितीयभाग्यो जज्ञे शिष्यो द्वितीयस्तु ॥७०॥
आसीत्सुविहितमुकुटः
स्फुटसंयमशुद्धिरिद्धगुणजलधिः ।
श्रीपद्मतिलकसूरि-
स्तार्त्तीयीकस्तु तच्छिष्यः ॥ ७१ ॥
श्रीसोमतिलकनामा ४९
सूरिर्विश्वोत्तमश्च तुर्योऽभूत् ।
महिमाम्बुधौ यदीये
लीनास्त्रिजगन्मनोमीनाः ॥ ७२ ॥

स बाणबाणत्रिकुवर्ष १३५५ माघे
जातः पदाभ्यामनुकूलखेटैः ।
नन्दाङ्गविश्वे १३६९ व्रतमाप्य भेजे
वन्ह्यश्वविश्वे१३७३ऽपि पदप्रतिष्ठाम्॥७३॥

सूरीन्द्रसोमप्रभपट्टभास्करो
बालोप्यसौ प्राप्तपदप्रभोदयः ।
क्षमाभृतां मौलिनिघृष्टपादभृत्
विदिद्युते स्फारयशाः प्रतापवान् ॥ ७४ ॥

अयं निजैः सूरिगुणैरनुत्तरैः
सूरिर्न कैरप्युपमामशिश्रियत् ।
येनोपमीयेत सरोऽम्बुराशिना
न चाम्बुराशिः सरसाम्बुऋद्धिभिः॥७५॥

अल्पायुष्ट्वात्सूरित्रितयस्यैकोप्यसावपाद्गच्छम् ।
रक्ष्यत्येकोऽपि वनं सिंहो न तु लक्षशोऽपि मृगाः॥७६।

न कैर्गजः सङ्घपतिः प्रशस्यते
स जङ्घरालव्यवहारिमण्डनः ।
यष्टङ्कसार्द्धायुतयामल २५००० व्यया-

दधीकरत्तत्पदमद्भुतोत्सवैः ॥ ७७ ॥

क्षोणीभूषणजङ्घरालनगरालङ्कारवीरालये
प्राप्ताचार्यपदस्य तस्य सुमहोभाग्यस्य दृष्ट्याप्यहो ।
भूतप्रेतकशाकिनीच्छलरिपूच्चाटस्फुरत्कार्मणा-
द्युत्थोपद्रवमण्डलानि निखिलान्याशु प्रणेशुर्नृणाम् ७८

नो दुष्टाः पशवः स्वभावरिपवः प्राबोभुवुर्नोखला-
स्तस्योत्कृष्टयशःप्रतापसुगुणा व्यापुश्च सर्वादिशः ।
तत्तन्निर्जितका इवापरमहासूरीश्वराणां च ते
दूरं क्वापि पलायिता बुबुधिरे कैश्चिद्यथा नो पुनः७९॥

षट्तर्कीपरितर्ककर्कशमतिप्रोत्सर्पिदर्पोत्कर-
स्फूर्ज्जद्दुर्दमवादिसंमदमदापस्मारविस्मारके ।
एतस्मिन्नवति प्रभौ जिनमतं तद्द्वेषिणः क्वाप्यगु-
रिछन्नोत्साहमतिप्रभावरुचयः कष्टं जिजीवुःपरम्॥८०॥

विश्वव्यापिनि तस्य विश्रुतयशःपद्माकरे सर्वतः
कम्पाङ्कोत्पतदम्बुशीकरतुलारूढोडुमालाञ्चितम् ।
नीलाम्भोजति तावदम्बरतलं स्फेष्ठाष्टकाष्ठादलं
सूर्याचन्द्रमसौ मरालतुलनादोलामथारोहतः॥८१॥

तस्याखिलश्वेतपटाधिपस्य
शक्नोति कः श्वेटपटान् प्रमातुम् ।
एको यशःश्वेतपटो यदस्य
दिगङ्गनाङ्गाऽऽवरणं विधत्ते ॥ ८२ ॥

किं बहुना ।

ध्वस्ता वादिमदा हतः कलिमलो मिथ्यात्वमुग्रं तम-
श्छिन्नं मण्डलमण्डलप्रसृमरं प्राप्तं नृपेभ्योऽर्चनम् ।
क्लृप्ता शासनभा युगोत्तमगुणैराऽऽप्ता तुला गौतमी-
त्युद्यल्लब्धिगुणप्रभावचरितैः सूरिः समोऽन्योऽस्य न८३
वृद्धक्षेत्रसमाससप्ततिशतस्थानादिशास्त्रैर्नवैः
पात्रैराऽऽगमवारिधेरतिगुरोः पूर्णैः स्वधीगाहितात् ।
उद्धृत्यार्थसुधारसान् सुमनसः संसारतापापहान्
सोऽपीप्यत् पुरुषोत्तमः स्वतिशयप्रौढिश्रिया संश्रितः८४
शिष्यांस्त्रीन् समतास्थपन्निजपदे प्राज्ञान् स तेष्वादिमः
ख्यातः श्रीगुरुचन्द्रशेखर इति त्रैवैद्यवारां निधिः ।
प्रौर्णोनोत् किल चन्द्रशेखरमहो नाम्नाऽपि पास्पर्द्धतं
यो ऽसोढा भुवने स्वकीर्त्तिपटलैर्निर्माय शौक्ल्याद्व-
यम् ॥ ८५ ॥

अभिमन्त्रितरजसा ऽपि हि
गृहहरिकादुर्द्धरश्च मृगराजः ।
दूरं नेशुर्यस्मात्
सपरिकारान्महिमवारिनिधेः ॥ ८६ ॥

न धीरं गोक्षीरं न मधु मधुरं किं तु विधुरं
मनः साक्षाद्द्राक्षा न हरति सुधा साऽपि हि मुधा ।
न सान्द्रा वा चान्द्रा न च मरुचयः साधुशुचयः
श्रुताचेद्यद्वाणी भवरिपुकृपाणी नवरसा ॥ ८७ ॥

वासिकभोज्यकथानकशत्रुञ्जयरैवतस्तुतिप्रमुखा ।
चित्राकृतिर्यदीया कविकुलमोदप्रदा जयति ॥ ८८ ॥

अग्न्यश्ववह्नीन्दुमिताब्दजातः १३७३
शरेभविश्वे १३८५ यमितामवाप्य ।
द्विनन्दविश्वे १३९२ च पदप्रतिष्ठां
त्रिदोर्मनुष्वा १४२३ ऽऽप च यः सुरौकः ॥ ८९ ॥

शिष्याध्यापनकौशलं निपुणता सा सार्ववैद्ये गिरां
माधुर्यं प्रशमादयो जनहितं चारित्रमप्युज्ज्वलम् ।
विश्वाप्यायकदेशनातिसुषमा चैवं परो विश्रुतै-

यस्याभूत् सदृशो गुणैर्न स गुरुः सङ्घाय देयात्सुखम् ९०

श्रीसोमतिलकसूरि-
स्तस्य गुरुस्तदनुचैकवर्षेण ।
जिनभुवने १४२४ स्वर्गमित-
स्तनोतु सङ्घाय कल्याणम् ॥ ९१ ॥

तस्य स्वर्गतिसमये
सुरकृतखोद्योतनादिमहिमानम् ।
वीक्ष्य जनाः प्रोचु-
रहो विमानमागाद्गुरोरस्य ॥ ९२ ॥

पात्रावतीर्णदेवी
जगौ सुरेभ्यः श्रुतं मया मेरौ ।
सौधर्मेन्द्रसमाना
जज्ञुरिमे श्रीतपाचार्याः ॥ ९३ ॥

शिष्यो द्वितीयस्त्वभवत्तदीयः
श्रीमान् जयानन्दगुरुः स योऽभूत् ।
कलिद्विषः क्लृप्तजयाद्विधाया-
नन्दं सतां सार्थकनामधेयः ॥ ९४ ॥

जातोऽन्तरिक्षाद्विपविश्ववत्सरे १३८०
द्विनन्दवह्नीन्दुषु१३९२ यो ऽभवद्व्रती ।
स्नेहान्निषेधप्रवणे ऽग्रजन्मनि
प्रबोधिते देवतया प्रभावकः ॥ ९५ ॥
पदं श्रितः सोत्तरसूरिरभ्रदो-
र्मनुष्व१४२०मेयातिशयाश्रियां निधिः ।
चकार रम्यं शकटालजन्मनो
वृत्तं गमी द्यां कुयुगाब्धिगोषु१४४१यः॥९६॥
यद्देशनाशैवलिनीनिलीनाः
प्रौज्झन् द्विजौघा अपि कल्कपङ्कम् ।
तदेकलीना जनचित्तमीना-
स्तथा परोद्यद्बकवृत्तिभीतिम् ॥ ९७ ॥
यदीयविद्याविभवादकोविदं
शेषंस्म सर्वं प्रतिभाति विष्टपम् ।
दधाति यद्दुर्विधता विधिं पुरो
महेन्द्रभूतेः सनरामरं जगत् ॥ ९८ ॥
युगोत्तमाभो जगदुत्तरो गुणै-

यौं भारतीभारतसंयमश्रियोः।
आधारभूतः समभूत् प्रभावभू-
स्तनोतु सङ्घस्य स सातसन्ततिम् ॥९९॥
श्रीदेवसुन्दरयुगोत्तमसूरिराजाः ५०
शिष्या जगत्त्रयदृशो जयिनस्तृतीयाः ।
यैर्भास्वरैः स गणराट् पुरुषोत्तमोऽपि
भूत्येशतामभृत सोमललामसूरिः ॥ ३००॥
षण्णवाग्निविधुवत्सर १३९६ जाताः
प्राव्रजन् जलधिखाब्धिमहीषु १४००।
ये महेश्वरपुरे नखरत्ने १४२०
पत्तेन च पदसम्पदमापुः ॥ १ ॥
येषां जगद्विस्मयमोदकारिणं
गजर्द्धिकन्दो विदधे पदोत्सवम् ।
सौवर्णिकः सङ्घपतिर्नृपप्रभः
सिंहोऽर्हतो ज्ञानमहं नु वासवः ॥ २ ॥
अथ तेषामवदातैतिह्यप्रकटनं किञ्चित्क्रमात् ॥
बाल्ये ऽपि येषां किलमञ्चिकाजुषां

सुलक्षणैः लक्षणवेदिनः पदौ ।
समीक्ष्य केचिद्विबुधा जगुः परां
चिरं भवित्रीं महनीयताम्भुवः ॥ ३ ॥
कोटीनाराह्वपुरे गणभृच्छ्रीसोमतिलकसूरिणाम् ।
गणभारोद्धरणपटुं पात्रं जिज्ञासमानानाम् ॥ ४ ॥

सुध्यानलीनमनसां
विशदगुणैर्भाविनो युगवराभाः ।
क्षुल्लत्वे ऽपि च कथिता
येऽम्बिकयानन्तभाग्ययुजः ॥ ५ ॥
॥ युग्मम् ॥
अभूत् त्रिशल्या वरयोगिनां वृतोऽ
न्यदोदयीपाभिधयोगिनायकः ।
कृतस्थितिः पत्तनगुञ्जडीसर-
स्यनेकमन्त्रादिसमृद्धिमान्दिरम् ॥ ६ ॥
हरन् गरान् स्थावरजङ्गमानयं
जलानलव्यालहरीभभीहरः ।
अनागतातीतविदद्भुतास्पदं

नृपेभ्यमन्त्र्याद्यखिलप्रजार्चितः ॥ ७ ॥

निरीक्ष्य दूरादपि यानरियूतो

मुदाशु दण्डव्रतकृत् सहानुगैः ।

अवन्दत व्यञ्जितभक्तिडम्बरः

प्रजासमक्षं बहुधास्तुवन्गुरून् ॥ ८ ॥

सङ्घाधिपनरियाद्यैः

पृष्टो नमनादिहेतुमाख्यच्च ।

गुरुरादिदेश दिव्य-

ज्ञानर्द्धिः कणयरीपामाम् ॥ ९ ॥

पञ्चाख्यदण्डपरिकर-

चिह्नैरुपलक्ष्यसूरयो वन्द्याः ।

भवता युगप्रधानाः

शिवदा इत्यादि तद्वनमम् ॥ १० ॥

धाराभिधश्रावकपुङ्गवेन

पक्षोपवासैर्वशितः सुपर्वा ।

अपृच्छ्य सीमन्धरसार्वमाख्यत्

त्रिभिर्भवैर्मुक्तिपदं हि येषाम् ॥ ११ ॥

सारङ्गमन्त्री वटपद्रवासभाक्

द्विषन् जिनोक्तीरपि पूर्वजक्रमात् ।

निबुध्य देवस्य गिरा युगोत्तमा-

नभिग्रहात् सिद्धपुरे ऽभिगम्ययान् ॥१२॥

वेदादिशास्त्रैः कृतनैकनोदनः

सप्रत्ययैर्यद्वचनामृतैर्मुदा ।

विधूय मिथ्यात्वगरं नतिस्तुतीः

सृजन् प्रबुद्धो जिनधर्ममग्रहीत् ॥१३॥

महाधनः श्राद्धवरः प्रभावकः

*सुदर्शनाणुव्रतभृत्सुशास्त्रवित् ।

दिने चतुष्प्रासुकद्रव्यभयोजन-

व्रतोऽस्ति नानाद्भुतपुण्यकर्मठः ॥ १४ ॥

गुणर्द्धिसंवादिसुपर्वभाषितै-

रपीति तेष्वेव युगप्रधानताम् ।

निश्चित्य युक्तं गुरुधीनिवेशनं-

शिवाय विज्ञैरधुना प्ररूप्यते ॥ १५ ॥

---

* सद्यौवनेऽप्येकसुतो ऽपि शीलवानित्यपि पाठः।

देवानां खलु सुन्दरो गुरुरिमामास्थाय नव्यां तनूं
दृष्ट्वा शासनमर्दितं कुकलिना तच्चिन्तकेन्द्रार्थितः।
अर्हद्भक्ततयात्र तत्सुखयितुं गच्छे ऽवतीर्णस्तपा
संज्ञे ततकिलदेवसुन्दरगुरुष्वाह्वापि तेष्वित्यसौ॥१६॥

विद्याभरो ऽसंख्यमुनीन्द्रवृन्दै-
निंपीयमानोऽपि हि वर्द्धमानः।
कथं तुलां यातु पयोधिर्नैषां
निःशेषमेकोऽपि पपौ मुनिर्यम्॥ १७॥

तेषां त्रैवैद्यपाथोधेरूर्म्युल्लासितशीकरान्।
पिबन्ति गुरुशुक्रज्ञास्ततकिलैतेऽपि पण्डिताः॥१८॥

सर्वतः प्रसरभाञ्जि यशांसि
क्षीरनीरनिधयन्ति यमिनाम्।
तानि तत्र परसूरिततीनां
शीकरावलिरिवाथ विभान्ति॥ १९॥

तेषां परेषामथ सूरिराजां
चिकीर्षिता विश्वकृता यशांसि।
उन्मानबीजानि विचिक्रिरे प्राक्

पूर्णेन्दुबिम्बं किल तारकाश्च ॥ २० ॥

उत्कल्लोलैर्द्विरदरदनच्छेदकुन्दावदातैः
शुक्लाद्वैतं त्रिजगति गमिते तैर्यशोभिः प्रपूर्य ।
अन्येषां चेद्विरिवृतति तदा तल्लवानैव लभ्याः
सत्ता यस्माद्विरमति सरितां सिन्धुना सङ्गतानाम्॥२१॥

को वेदयिष्यत्तुलना मतीतान्
श्रीगौतमादीन् गणिनो व्यतीतान् ।
युगोत्तमास्ते यदि नाभविष्यन्
निदर्शयन्तः स्वगुणश्रिया तान् ॥ २२ ॥

वीरेण ये शासनधारका महा-
चार्याः स्वनिर्वाणपदादनूदिताः ।
एते ऽवगम्याः खलु ते गुणोच्चयै-
रज्ञैतदीयैव शिवाय तत्कृता ॥ २३ ॥

नालं यस्या हि नेता
हरगिरिरमलः कर्णिकाबन्धबन्धु-
र्भाग्यद्दिग्दन्तिदन्ता-
दलततिरतुला पूर्णचन्द्रश्च कोशः ।

ज्योत्स्नापूरः परागः

सितकरकिरणाः केसरालीव भाति

स्फीतं तत्तद्यशोऽब्जं

त्रिभुवनसरसि व्योमभृङ्गानुषाङ्गि ॥ २४ ॥

न विद्यया नैव तपोभिराग्रिमै-

र्नैवा महिम्ना न च भाग्यसम्पदा ।

गुणर्द्धिभिर्वाप्यधिकः समोऽथवा

न कोऽपि तेषामधुनेह वीक्ष्यते ॥ २५ ॥

तदीयपट्टे गुरवो जयन्ति ये

ये चापुरिन्द्रातिथितां विधेर्वशात् ।

तन्नामसङ्कीर्त्तनपुण्यवारिभि-

र्गिरं पवित्रां विदधे ऽधुना मुदा ॥ २६ ॥

श्रीज्ञानसागरगुरुप्रभवो ५१ बभूवु-

राद्या यदीक्षकबुधा इति चिन्तयन्ति ।

मुक्तोऽपि गौतमगुरुः समवातरत्स्वं

वीक्ष्यान्वयं सुगतवत्किलदुःस्थमेषः ॥२७॥

अन्तः साम्यसुधाहृदप्रसृमराः किं प्रोच्चवीचीचया

हेलापीतजिनागमाम्बुधिभुवः प्रोद्गारमालाः किमु ।
किं वा वक्त्रसुधाद्युतेर्द्युतिभराः पीयूषदिग्धाः सता-
मेवं स्मोदयते विकल्पनिकरो यद्देशनागीर्श्वहो॥२८॥

संमील्याखिलसाम्यकाम्यकणकान्
विश्वस्य किं योगिनां
सारान् कांश्चन् वा निचित्य जगतां
पीयूषवीचीकणान् ।
सर्वद्वीपसुधांशुमण्डलमिलत
सौम्यत्वलक्ष्मीलवान्
किं वादाय विनिर्मिते यमिति यन्-
मूर्त्तिर्बुधैस्तर्किता ॥ २९ ॥

शरणं समसूरिसम्पदां हरणं
कल्मषसंहतेस्सताम् ।
वरणं खलु निर्वृतिश्रियां
न मुदे कस्य यदीयदर्शनम् ॥ ३० ॥

असमा जगति श्रुतश्रियो
न पथे संयमशुद्धता गिराम् ।

समतीततुला च सौम्यते-
त्यभवंस्ते जगदुत्तमा गुणैः ॥ ३१ ॥

किं मूर्त्ति नवमः श्रितो रसपतिः सिद्धान्ततत्वश्रियां
कोशाः किं गुणसम्पदामिति मुचां चन्द्रद्युतां किं निधिः।
जीवातुः कलिविद्विषा प्रतिहतः श्रीजैनधर्मस्य किं
दुर्गः किं भवभीतजन्तुनिवहस्येत्यूहितास्ते बुधैः॥३२॥

न ग्रामे न कुले तनौ नन मुनौ तेषां मनो बन्धभाक्
शप्यान्नौषधपानकादिनितरां तैः शुद्धमेवाद्दतम् ।
चातुर्वैद्यरमाह्वधारि भुवनोत्कृष्टा न चैतन्मदः
तत्त्वं तेन वदाम्यहो जिनमतस्याऽसूपमास्ते ऽभवन्३३

धन्यो धनः सङ्घपतिः पदोत्सवान्
श्रीस्तम्भतीर्थे विविधाद्भुतप्रथम् ।
तेषां महोस्तम्भनकेशापार्श्व-
चैत्ये महाराजबलादचीकरत् ॥ ३४ ॥

ते लेभिरे जन्ममनुप्रभाऽब्दशतेषु
यातेष्वाधिकेषु बाणैः १४०५ हयेन्दुभिः १४१७
संयममिन्दुवेदैः १४४१ पदं

खतकैस्त्रिदिवं १४६० च तुर्यम् ॥ ३५ ॥

स्वमायुरन्ते स्वयमाकलय्य ते
निषिध्यभक्तं बहुसङ्घसाक्षिकम् ।
संवर्मितां साम्यसुधारसोर्मिभि-
र्यद्योगिमुद्रां विशदां दधुस्तदा ॥ ३६ ॥

यच्छ्वासकासौ च कफान्वितौ द्रुतं
व्यनेशतां कोटिगयोगविद्रुतौ ।
तेषां हि गम्या तदनुत्तरागतिः
संवादमात्रं त्रिदशोक्तयः पुनः ॥ ३७ ॥

ताश्चेमाः ।

खरतरपक्षश्राद्धो
मन्त्रिवरो गोवलः सकलरात्रिम् ।
अनशनसिद्धौ भक्त्या
गुरुकर्पूरादिभोगकरः ॥ ३८ ॥

ईषन्निद्रामाप्या-
पश्यत्स्वप्ने सुदिव्यरूपधरान् ।
तानिति वदतस्तुर्ये

कल्पेस्सः शक्रसमविभवाः ॥ ३९ ॥

॥ युग्मम् ॥

श्रीगुणरत्नगुरून् ये

स्वप्ने स्वरराजरूपिणौ दृष्टाः ।

शिष्टाशिष्टविशेषा-

द्युपलम्भं लम्भयामासुः ॥ ४० ॥

नैमित्तिको ऽपि वीरो

पश्यत्तुर्यस्वरिन्द्रसमविभवात् ।

तदनुत्तरगातिलाभाद्

युगोत्तमांस्तान् विनिश्चिनुमः ॥ ४१ ॥

तेषां निखातैर्ध्रुवमुत्तमैर्गुणैः

सताम्प्रपूर्णानि मनांस्यहो तथा

यथात्र केषामपि तेषु ते ऽधुनाऽ

वकाश मायांत्यणुरूपिणोऽपि न ॥ ४२ ॥

तेषां गुणानामचिरस्य चायुषः

प्रमोदखेदाश्रुभरः स्मृतेर्मम ।

यः स्यात्समं सैषनिदानभेदतः

कार्ये भिदैकान्तमतं निरस्यति ॥ ४३ ॥

विधेर्जराविक्लवताखलायितं
कलेर्भुवोभाग्यविपर्ययोऽथवा ।
पूतीबुभूषा त्रिदिवस्य वाभज-
न्निदानतामत्र चिरं तदस्थितौ ॥ ४४ ॥

श्रीसोमसुन्दरगुरुप्रमुखास्तदीयं
त्रैवैद्यसागरमगाधमिहावगाह्य ।
प्राप्योत्तरार्थमणिराशिमनर्घ्यलक्ष्मी-
लीलापदं प्रदधते पुरुषोत्तमत्वम् ॥ ४५ ॥

न स्थैर्यं सुमनः पथे प्रविदधन्नैवापि वर्णोज्वलः
प्रोचच्चापलउल्लसज्जडतया यो निम्नगोल्लासकृत् ।
यद्गर्जत्यपि मादृशो जलदवत्सोच्चैः पदं संश्रितः
तत्त्रैवैद्यमहाब्धिशीकरकणादानस्य तज्जृम्भितम्॥४६॥

सारस्वते प्रवाहे
तेषां शोषंगते ऽधुना कालात् ।
शिष्यैरुपक्रियन्ते
विद्याम्भः कूपकैर्लोकाः ॥ ४७ ॥

दीनाद्युद्धरणात्पदोत्सवकृतेस्तीर्थेषु यात्रादिभिः
सत्रैर्दुस्समये गुरुप्रणमनैर्भक्त्या सदावश्यकैः ।
चैत्योद्धारविधापनैर्वितरणैःक्षेत्रेषु सप्तस्वपि
प्रौढैः पुण्यभरैः प्रभावपदवीं येनाऽऽप्यते शासनम् ४८

सर्वेभ्यमालामुकुटस्य तस्य
श्रीपातसाहोच्छ्रितमाननस्य ।
कर्णावतीमण्डनचाचसूनोः
सङ्घाधिपेन्दोर्गुणराजनाम्नः ॥ ४९ ॥

बन्धुः प्रबुद्धो वचनैर्गुरूणां
तेषां महामोहतमोवृतोऽपि ।
आम्रः प्रवव्राज विमुच्य पत्नी-
पुत्रादिकानद्भुतभाश्च लक्ष्मीः ॥५०॥

श्यामलनाममहेभ्यस्तेभ्यो बुद्धश्च नव्यरूपवयाः ।
प्राव्राजीत्परिमुच्याऽनुरागरूपोत्तरां जायाम् ॥५१ ॥

मुनीशिताऽरोऽर्द्धचतुर्थवंशाः
प्राबोध्य चाऽन्ये ऽपि हि ।
दीक्षितास्तैर्गुणर्द्धिपात्राणि विचित्र-

चञ्चज्ज्ञानादिसम्पत्पदवीं भजन्ते ॥५२॥

मेदपाटपतिलक्षभूमि-

भृद्रक्ष्यदेवकुलपाटके पुरे ।

मेघवीसलसकेल्हहेमसज्जी-

मनिम्बकटुकाद्युपासकैः ॥ ५३ ॥

श्रीतपागुरुगुरुत्वबुद्धिभिः

कारितं तदुपदेशसंश्रुतैः ।

तैः प्रतिष्ठितमथाऽऽदिमार्हतो

मन्दिरं ह्सनगोपमं श्रिया ॥ ५४ ॥

॥ युग्मम् ॥

कान्ता या गणिसंपदो गणभृतस्तत्पूर्वजस्या ऽभवं-
स्तस्मिन् सिद्धिमिते सतीव्रतजुषो या नो कमप्यस्पृशन्
ता योगातिजरा बलाज्जगृहिरे तैः कीर्त्तिकन्याश्चतत्
संयोगे जनितास्तथापि चरितं तेषामहो श्लाघ्यते५५
किञ्चिच्छान्तमपि प्रमाणपठनैर्जाड्यं पुरावादिनां
भैषज्यैरिव लब्ध्वाऽलर्कविषवद्वादे पुनः प्रास्फुरत् ।
नव्याब्देष्विव तेषु दुर्द्धरतरस्याद्वादगर्जारवं

वर्षत्स्वात्महोन्नतिष्वनुपमोपन्यासपूरामृतम् ॥५६॥
पीत्वा विनाशिताम्भोधिं पीताब्धिं कः प्रशंसति।
पीतस्याब्धेर्न यस्याऽस्थादुदरे बिन्दुरप्यहो ॥ ५७ ॥
चन्द्रशेखरसूरीणां ज्ञानाब्धिस्तैस्त्वशेषतः।
पीत्वा हृदि धृतः सर्वः स्वादुर्दत्तो ऽप्यवर्द्धत ॥५८॥
॥ युग्मम् ॥
स्त्रीपुंसाद्याकृतिभिरुदिते बाह्यरूपैरविद्या-
शक्त्या भातैस्तदपगमतश्चिन्मयैकात्मलीनम्।
सत्तामात्रं न यदुपगतं तत्त्वतोऽस्मिन् विवर्त्ते
चित्तं तेषां तदपि विषयग्रामबद्धं कथं स्यात् ॥५९॥
साम्यारामे स्थिरतरलयात्सर्वदोन्मीलदेका-
नन्दास्वादेऽपसृतसकलोपाधिजव्याकुलत्वे।
शान्त्याश्लेषप्रणयिनि यदात्मन्युदेतीह सौख्यं
रम्भाभोगोद्भवमिव हरिस्तत्तएवान्वभूवन् ॥ ६० ॥
मूलग्रन्थचतुर्दिक्षुशासनौकार्थदीपिकाः।
दीपिका इव राजन्ते तत्प्रणीताऽवचूर्णयः ॥६१॥
तत्कृतिवेला जल्पति पीतत्रैवेद्यवार्द्धिगाम्भीर्यम्।

भृगुपुरघोघातीर्थस्तोत्रमुखा विहितचित्तसुखा॥६२॥

ते सत्पदोन्नतिभृतः सुगभीरघोषाः
निर्वापिताखिलजनाऽघनिदाघतापाः।
प्राप्ता घनागमरमाममृतं ददाना
घोस्था भवन्तु भुवि मङ्गलवाह्लिपुष्पैः ॥६३॥

सूरीश्वराः श्रीकुलमण्डनाह्वा-
स्तेषां विनेया अभवन् द्वितीयाः।
भाग्यं यदीयं पुनरद्वितीयं
ख्यातं यशश्च त्रितयेऽपि लोके॥ ६४ ॥

संवित्तिरेव सततं हृदि वावसीति
नो ऽसंवृतिस्तु लभते ऽपि पदप्रवेशम्।
क्रुद्धेति साऽऽप्य परवादिततीर्विरुद्धा-
स्तेषां जघान किल जल्पजकेलिशर्म ॥६५॥

तदीयचातुर्यरमावलोककैः
सम्भाव्यते ऽपीन्द्रगुरोः स्म मूर्खिमा।
शेश्रीयते गोष्पदतां यतः सरो
महाम्बुराशेः पुरतो ऽपि मानसम् ॥ ६६ ॥

अहो नवः कश्चन बोधदीप-

स्तेषां जगद्भासनशक्तिशाली ।

निःश्वासवातैर्जितवादिनां यः

प्रगल्भतेस्माऽस्तभवाहिदर्पः ॥ ६७ ॥

जन्माङ्कखैरभ्यधिकेषु शक्रे-

ष्व१४०९श्चौषधीशैर्व्रत१४१७ मक्षिवेदैः ।

१४४२ सूरेः पदं चाप शरेषु भि१४५५स्ते

चैत्रे ययुः स्वर्जगतामभाग्यात् ॥६८॥

विधेर्जरा० ॥ ६९ ॥

निजतीर्थिकपरिकल्पित-

कुमतोद्धरशैलदलनशतधारः ।

तन्निर्मितो विजयते

सिद्धान्तालापकोद्धारः ॥ ७० ॥

अष्टादशारचक्रं तेषां हारश्च सपदि भापयते ।

विबुधानामपि हृदयं चञ्चद्वर्णस्फुरद्भाभृत् ॥ ७१ ॥

क्षमाधरगणाकीर्णगच्छभूभारधारिणः ।

दिग्नागफणिनाथाद्यैः स्पर्द्धन्ते ते स्म सन्ततम्॥७२॥

उभावेतौ गुरू यातौ नेत्रेतु चरणाश्रियः ।
स्खलत्येषा ततः सम्प्रत्यतिचारैः समेष्वपि ॥७३॥

तेषां च सूरिगुणरत्नसमन्वितानां
श्रीस्तम्भतीर्थनगरालिगसद्वसत्याम् ।
सौवर्णिको लषमसिंह इति प्रसिद्ध-
श्चक्रे पदोत्सवततीर्वरसङ्घनेता ॥ ७४ ॥

गुरूत्तमाः श्रीकुलमण्डनास्ते
प्रख्याततेजः प्रचयप्रभावाः ।
जगत्पवित्रीकरणाभिधाना-
स्तन्वन्तु मङ्गल्यसुखानि सङ्घे ॥ ७५ ॥

देवसुन्दरगुरुक्रमपद्मोपास्ति-
विस्तृतसमस्तगुणा ये ।
तद्विनेयवृषभा विजयन्ते
कीर्त्तयामि ततकीर्त्तिततींस्तान् ॥७६॥

आद्या जयन्ति गुणरत्नमुनीन्द्रचन्द्राः
सूरीश्वराः सुगुणरत्नविभूषणैयैः ।
सा काप्यवापि सुभगत्वरमा यया तान्

श्लिष्यन्ति सर्वबुधमानसवृत्तिनार्यः ॥७७॥

तेषां निर्जितवादिराजिकुयशोजम्बालजालाविले
भ्रान्त्वा भूवलये ऽखिलेऽथ चलिता खं स्वर्गदण्डाध्वना
स्नान्ती श्रान्तिहतीच्छयेन्दुसरसि स्वैरं सुधाशीकरान्
कीर्त्तिर्यान् विकिरत्यमी प्रतिनिशं दृश्या ग्रहादिच्छ-
लात् ॥ ७८ ॥

यज्जाता हिमभूभृतः पशुपतेः पत्नीति कः प्रत्यय-
स्तत्कीर्त्तिर्जनिताऽमुनेति तु सतां नूनं प्रतीते पथः ।
एषा यद्धवला हिमाऽपि जनयेन् म्लानिञ्जवाद्वादिनां
वत्काम्भोजगणेषु निर्दहति च प्रोद्दामदर्पद्रुमान्॥७९॥

ग्रन्थेषु येषु न परस्य धियां प्रवेशो
ऽप्येतेष्वऽपि प्रसरतीह तदीयबुद्धिः ।
वेलाययत्यापि तटाश्रितमन्यमब्धि-
र्यः सोऽपि दैत्यरिपुणा किमु नो ममन्थे ॥८०॥

जगदुत्तरो हि तेषां नियमोऽवष्टम्भरोषविकथानाम् ।
आसन्नां मुक्तिरमां वदति चारित्रातिनैर्मल्यात् ॥८१॥

सिद्धत्वात्सार्ववैद्यस्य ते सिद्धपुरुषोत्तमाः ।

तदासतत्कणाः शिष्याः यद्वशीकुर्वते जगत्॥८२॥

सर्वव्याकरणावदातहृदयाः साहित्यसत्यासवो
गम्भीरागमदुग्धसिन्धुलहरीपानैकपीताब्धयः।
ज्यायोज्योतिषनिस्तुषाः प्रदधतस्तर्केषु चाचार्यकं
वादे तेऽत्र जयन्त्यशेषविदुषां स्वैवैद्यदर्पोष्मलान्॥८३॥

उत्कल्लोलं दिशि दिशि बुधाः कर्णपात्रैः पिबन्तः
स्फीतं गीतं सुकृतिततिभिस्तद्यशःक्षीरपूरम्।
तेषां शुद्धां चरणकमलां बिभ्रतां श्रीगुरूणां
सृष्ट्या स्रष्टा जगदुपकृतं मन्वते सांप्रतं वै॥८४॥

परमेष्ठिमन्त्रतत्त्वाम्नायस्मरणेन दैवतादेशैः।
पारत्रिकैहिकीस्ते प्रायो जानन्ति कार्यगतीः॥८५॥

स्वदर्शने वा परदर्शनेषु वा
ग्रन्थः स विद्यासु चतुर्दशस्वऽपि।
समीक्ष्यते नैव सुदुर्गमेऽप्यहो
यत्र प्रगल्भा न तदीयशेमुखी॥८६॥

या ज्ञानाद्युद्यमप्रौढिर्या च नित्याऽप्रमादिता।
या चैषा स्मरणाशक्तिः साऽन्यत्र श्रूयतेऽपि न।८७।

चक्षुष्टीकाशलाकां ते षट्दर्शनसमुच्चये ।
ज्ञाननेत्राञ्जनायेव सतां तत्त्वार्थदर्शिनीम् ॥८८॥

उद्धृत्य ये व्याकरणाम्बुराशितो
विलोड्य बुद्धिप्रसरामराद्रिणा ।
शुद्धक्रियारत्नसमुच्चयं सता-
माश्चर्यभूतं विबुधालये ददुः ॥ ८९ ॥

लोकोत्तरां सच्चरणश्रियं मुदा
सदाभजन्तश्च सरस्वतीं प्रियाम् ।
दुष्कर्मदैत्यव्यथका जयन्तु ते
गुरुप्रवेकाः पुरुषोत्तमाश्चिरम् ॥ ९० ॥
॥ युग्मम् ॥

बिभ्रतेऽथ नवतां जयिनः श्री-
सोमसुन्दरगुरुक्रमपद्माः ५१ ।
संस्मृता अपि विदध्युरनन्तं
शीतिमानमघतापहृतेर्ये ॥ ९१ ॥

सरस्वतीमाऽऽगमवार्द्धिसङ्गता-
मवाप्य येषां सुरसोर्मिवर्मिताम् ।

पुपूष या स्वस्य तु सन्मनोगण-

स्त्यज्जेन्न तीर्थं प्रियमेलकं विदन् ॥९२॥

न नाममात्रादपि तु स्फुरत्प्रभै-

र्गुणप्रभावैर्नरसिंह एव सः ।

महोत्सवैर्यः कलिदैत्यहिंसनात्

क्षमाभृतोऽमून् सुपदे १४५७ न्यवीविशत्॥९३॥

तान् दृष्ट्वेवात्मकीर्त्या

विशदसुभगताख्यापनादुत्सुकत्वं

दत्वा नीता भजन्ते

सकलसुमनसां यन्मनोवृत्तिनार्यः ।

लब्ध्वागस्तद्गुरूणां

निजनुतिसमयावाङ्मुखत्वावलोकाः

क्रुद्धाः प्रोद्यद्गुणौघा

निगदितुमिव तत्कर्णपङ्क्तौ विशन्ति ॥९४॥

सौभाग्यतस्तेऽभ्यधिका हरेः पितु-

र्वैताढ्यविद्याधरसेव्यताजुषः ।

भजन्ति वामा न परं क्षमाभृतां

ध्यायन्ति यत्तान् सुमनोऽबला अपि ॥९५॥

तैः पाल्यमाने जिनशासनेऽधुना

नेशा विधातुं कुमतव्रजा व्यथाम्।

प्रकाशितं पद्मवनं विवस्वता

पराभिभूयेत तमोभरैर्न यत् ॥ ९६ ॥

आराध्य देवानपि या दुरापा

वाणी परैस्तेषु निसर्गतः सा।

दुरासदान्यैर्विविधैरुपायै-

र्या श्रीर्हरेः सानुचरी स्वभावात् ॥९७॥

किं मोहाऽहिविषोर्मिमूर्च्छितजगज्जीवातवोऽमूः सुधा-

धाराः स्वागमदुग्धवारिधिभवाः स्फारालहर्यः किमु।

किं वा शासनसौधभासनचणा दीप्राः प्रदीपश्रियः

सर्वध्वान्तभिदः सतामिति मतिं तद्देशनास्तन्वते॥९८॥

त एव धर्त्तुं जिनशासनं पतत्

तद्दुःषमापङ्कभरेऽधुनेशते।

युगान्तवातोद्धुतवार्द्धिविप्लुतां

महावराहान्नपरो दधाति गाम् ॥ ९९ ॥

क्षमापराइत्यपि साहसिक्यात
समारतो जेज्यति ते प्रवादान् ।
दन्दह्यते वा शिशिरेति बुध्या-
प्यालिङ्गिताब्जानि न किं हिमानी॥४००॥

उपतदमपि संश्रिते विनेये
विलसति वाग् सुमनोमनोऽपहर्त्री ।
गुणवति रमणे तदाश्रिते वा
भवति रतिः किल योषितां समाना ॥१॥

प्रभवति महिमा यथा तदीयो
जगति न कस्य च नापरस्य तद्वत् ।
प्रसरति तरणे मरीचिचक्रं
वियति यथा न तथाहि तारकाणाम्॥२॥

नित्यं विवृद्धिगकलाः सदखण्डवृत्ताः
प्रासोदयाः स्मरहृतो ऽस्तकुरङ्गसङ्गाः।
भ्रान्त्युज्झिता विदलयन्ति तमस्तथापि
श्रीसोमसुन्दरतया प्रथिता अहो ते ॥ ३ ॥

ते श्रीतिमानमतुलं दधते भवस्या-

घः कारकारककलावरवृत्तताढ्याः ।
सन्दर्शितामृतरसा निजगोविलासैः
श्रीसोमसुन्दरतया प्रथिताः सुयुक्तम् ॥ ४ ॥

नानागोचरमारवस्थलततिभ्रान्त्युत्थतापोत्तृषः
सौख्येच्छामृगतृष्णिकांभसि न के ताम्यन्ति चेतो मृगाः
खेलत्यात्मवने लयी स परमानन्दादिदूर्वाङ्कुरा-
स्वादी साम्यसुधाह्रदे प्लवनकृत्तुष्यंस्तदीयः*पुनः॥५॥

जितद्राक्षाव्याख्यावचनललितं साम्यकलितं
गुरुस्फूर्त्तिमूर्त्तिर्लवणिमकलादोषविकला ।
अहो येषां पोषांकितसुचरणं सिद्धिवरणं
विमुद्रं ते भद्रं ददतु भवतां धीधनवताम् ॥ ६ ॥

श्रीसाधुरत्नगुरुविस्तृतभाभरोऽयं
श्रीगच्छमौलिरमलः समलंकरोति ।
श्रीजैनशासननृपं निहतारिवर्ग-
स्फूर्ज्जत्प्रतापमहिमाप्तजगत्प्रभुत्वम् ॥ ७ ॥

वेलेवोल्लासिनी तद्गीस्त्रैवैद्याऽपरसागरे ।

---

* स्तवयं इत्यपि पाठः ।

दूरं विक्षिपते द्रप्यद्वादिनः कर्करानिव ॥ ८ ॥
आकौशलधरः काव्योप्यानैपुणधरो गुरुः ।
तेषां विद्यासु नैपुण्यादाचतुर्यमयं जगत् ॥ ९ ॥

प्रभावकाणां प्रथमः प्रसिद्धिभाग्
स सङ्घनेता प्रथमः प्रशस्यते ।
अचीकरद्योऽद्भुततत्पदोत्सवं
श्रीपत्तनेऽष्टेन्द्रियरत्नवत्सरे १४५८ ॥ १० ॥

आहेमचन्द्रात्रिदिवं विधाय
प्रभावकोत्पत्तिकथादरिद्रम् ।
स्रष्ट्यानुसृष्ट्या पुनरेव तेषां
जैनेश्वरं शासनमन्वकंपि ॥ ११ ॥

वर्षत्सून्नतवारिदेष्विव मुहुर्वादेषु तर्कामृतम्*
तैषूच्चैः पदसङ्गतेषु भुवि या कीर्त्तिः सरिज्जायते ।
सम्पूर्योत्तममानसानि विदुषामुन्मूल्यदर्पद्रुमान्
मिथ्यात्वोरुदवोपशान्तिमपि सा कृत्वाब्धिमालिङ्गति १२

कलन्दिकासौरभभृत्पदाम्बुजा-

* धर्मोपदेशामृतमिति वा पाठः ।

श्रितस्य तेषां व्यथते न मूर्खिमा ।
न नैशमन्धातमसं प्रगल्भते
विलेप्तुमुष्णांशुकराम्बुजं यतः ॥ १३ ॥

यतिजीतकल्पवृत्तिर्वृत्तिरिव चारित्रकल्पवृक्षस्य ।
तन्निर्मिता विजयते ऽतिचारचौरादिचारहरा ॥१४॥

उत्फुल्लाक्षैस्तनुलवणिमालोकनात् स्मेरचित्तै-
र्ध्यानाह्वान्यार्पितगुणततेर्वाक्श्रुतेः प्रीतकर्णैः ।
ये मन्यन्ते विबुधनिकरैर्गौतमस्याऽवतारः
श्रेयः श्रेणीं ददतु जगते ते जयश्रीपरीताः ॥१५॥

श्रीदेवसुन्दरगुरुप्रभवो गणेशा
अप्याश्रयन्ति गुरुभिस्त्रिभिरेभिरेवम् ।
सूक्ष्मार्थबोधरतिकान्तहतिप्रगल्भै-
र्नेत्रैरिव त्रिभुवनेऽपि हि शङ्करत्वम् ॥१६॥

श्रीमद्गच्छहिमालये लवणिमोत्कल्लोलपद्मह्रद-
स्ते नूनं गुरवः सरित्ततिरिवैतेभ्यो विनेयावली ।
उद्भूता भुवनेऽभितः प्रसृमरा वादिद्रुविद्राविणी
पावित्र्यं तनुते हरत्यथ मलं मिथ्यात्वतापापहा ॥१७॥

लसन्ति तेषां गणरत्नसिन्धौ
मुनीन्द्ररत्नानि महाप्रभाणि ।
क्षमाधराणामपि मौलिमाला
शोभाखिलाशासु विधीयते तैः ॥ १८ ॥

॥ तथा हि ॥

श्रीदेवशेखरगणिप्रथिताभिधानाः
श्रीवाचकावलिशिरोमुकुटायमानाः ।
तेषां विशुद्धगुणसंयमभासमानाः
शिष्या जयन्ति विगलत्कलिशत्रुमानाः१९

शिष्यस्तदीयोऽयमपीति मन्यते
श्रीवाचकेन्द्रेष्वगुणोऽपि मादृशः ।
ग्रहप्रभोः पुत्रइति ग्रहावलौ
न पूज्यते पङ्गुरपीह किं शनिः ॥ २० ॥

अहो तेषां कराम्भोजवासानां सुप्रभावता ।
जातो यैर्मौलिगैर्योग्योप्यहकं मुनिसुन्दरः ॥ २१ ॥

श्रीश्रुतसुन्दरवाचकवर्याः श्लाघ्या न कस्य गुणनिधयः
यद्गीःस्पर्द्धापापान्मन्ये श्वभ्रे सुधापत्तत् ॥ २२ ॥

जयचन्द्रवाचकैः किल जित्वा विद्याबलेन लघिमानम्।
नीता गुरुबुधशुक्राः स्थेमानं दधति न क्वापि॥ २३॥
श्रीभुवनसुन्दरा अपि वाचकवर्या न कस्य हर्षाय ।
सत्यापि येषां वाणी प्रतिचतुरं लीयते हृदये ॥२४॥
श्रीजिनसुन्दरवाचकहृदयगृहेऽ दोषवैर्यविषयतया ।
विनयो गुरुभक्त्या सह विलसति निश्शङ्कमनवरतम्२५
सम्यक्परिहृतसप्ताऽधिकदशभिदऽसंयमा विशदचित्ताः।
कण्ठस्थाऽऽगमसूत्रस्फुरदर्थाः संवृतास्रवणाः ॥ २६ ॥
जयवर्मनामविबुधाः स्थविरा गच्छेशबन्धवः कस्य ।
श्लाघ्या नैतत्काला ऽनुत्तरगुणचरणकरणाढ्याः ॥२७॥

॥ युग्मम् ॥

नानाऽनार्यप्रायान् देशान् दूरेऽप्यबूबुधन् धीराः।
स्थविराश्च देवमङ्गलविबुधा गुरुगच्छकार्यकृतः॥२८॥
अन्येऽपि श्रुतसागरदेवप्रभरत्नसुन्दरा विबुधाः ।
अथ सर्वशेखराह्वाः ख्याताः क्षेमङ्कराह्वाश्च ॥ २९॥
संविग्नकमलचन्द्राः सदाश्रवा ज्ञानकीर्त्तयश्चाऽपि ।
बुधसाधुसुन्दराऽभयसुन्दरामिश्रा यशःश्रीद्धाः ॥३०॥

आनन्दवल्लभाह्वा विशदगुणाः सहजधर्मनामानः ।
विबुधेन्द्रशीलकुम्भा विख्याताः शान्तिमूर्त्तिबुधाः ३१
निस्सङ्गतैकरङ्गा वनवासे सोमशेखरा लीनाः ।
गुर्वादेशधुरीणा विमलादिकमूर्त्तयश्चाऽपि ॥ ३२ ॥
सर्वसमुद्राद्या अपि बहवो लुप्तान्यगणकतारकभाः ।
गच्छेशार्ककरा इव दिशि २ निघ्नन्ति मोहतमः ॥३३॥
पञ्चभिः कुलकम् ।

प्रायो भान्ति गणेऽस्मिन्
पदान्यहो चतुरशीतिसङ्ख्यानि ।
इव तावतां गणानां
सारैर्विहितानि विधिनाप्तैः ॥ ३४॥

गुरुर्विनयो गणभक्तिर्ज्ञानचरित्रादयश्च निर्द्वन्द्वाः ।
आसन्महत्तरायां सुगुणाश्चारित्रचूलायाम् ॥ ३५ ॥
यस्याः समयार्थमणीविदूरभूमेः पुरः श्रयेद्ब्राह्मी ।
आकोशलं प्रशस्या महत्तरा भुवनचूला सा ॥३६॥

प्रवचन १ धर्मकथाज्ञौ २
वादी ३ नैमित्तिक ४ स्तपस्वी ५ च ।

विद्यावित् ६ सिद्ध ७ कवी ८

प्रभावकाश्चाऽष्ट तद्गच्छे ॥ ३७ ॥

तथाहि ।

आचार्योपाध्याया गणेऽत्र वादाद्यशेषलब्धिजुषः ।

प्रायोऽष्टधाऽपि सर्वे शासनमुल्लासयन्त्यमितः॥३८॥

विभागतोऽपि च ।

आचार्यादिपदस्था यतयः साध्व्यो महत्तराद्याश्च ।

श्राद्धाश्च तारतम्यात् प्रवचनकुशला विभान्त्यत्र ॥३९॥

श्रीजिनसुन्दरवाचकमनुमितशरदुदयरत्नमुन्याद्याः ।

हरिरिव भुवनान्युदरे बिभ्रत्यङ्गानि निखिलानि ॥४०॥१

सर्वपदस्थाः प्रायो यतयः श्राद्धाश्च मन्त्रिहेमाद्याः ।

धर्मकथालब्धिभृतः करन्ति जिनधर्मसाम्राज्यम्॥४१॥२

श्रीसूरिवाचकेन्द्रैर्विद्याधनयाचकीभवद्धिषणैः ।

ध्रियतेऽत्र वादलब्धिर्विबुधैर्यतिभिश्च बहुभिर्ज्ञैः॥४२॥३

संवृतसर्वास्रवणप्रबुद्धवरसर्ववल्लभप्रमुखाः ।

अवितथनिमित्तविज्ञा गणरक्षणदाक्षिणा बहवः॥४३॥४

गुरुगच्छबालवृद्धप्रमुखमहानेककार्यनिष्णाताः ।

सर्वधुरीणप्रवरा माध्यस्थ्याद्यैरनन्यसमाः ॥ ४४ ॥

द्वादशधातपसि रता गुणवर्द्धनसाधुसागरप्रमुखाः ।

लोकोत्तरगुणचरिता निवसन्ति मनस्सु नो केषाम् ४५

येषां तपःशक्तिहत प्रभावाः

सप्तर्षयः शून्यमहो भ्रमन्तः ।

शास्त्रैर्निषिद्धामपि रात्रिचर्यां

चरन्त्यदृश्याः किल लज्जयाऽह्नि ॥ ४६ ॥

मासद्वयोपवासप्रमुखैः संसारतारणमुखैश्च ।

त्रिदिनोत्सर्गाद्यैरपि विविधैर्बाह्यान्तरतपोभिः ॥ ४७ ॥

ते सर्वदेवादिमुनीश्वराश्च

निस्तन्द्रसंवेगसुधाऽभितृप्ताः ।

प्रत्याययन्तः किल धन्यमेघ-

श्रीशालिबाहुप्रमुखान् जयन्ति ॥ ४८ ॥

श्रीवीरभक्त्या मदमुग्दशोनं

षण्मासिकं यो विदधे तपोऽन्यम् ।

महातपस्कर्मसु नित्यलीनं

तं शान्तिचन्द्रं गणिराजमीडे ॥४९॥५॥

जानाना गुरुविहितं स्खलिते शकटालजन्मनो दण्डं ।
गुप्तधना विद्याढ्या बहवः सिद्धाश्च सन्त्यत्र ॥५०॥६।७

किं वाच्यं कविसम्पदि बाला अपि यत्कवित्वगुणललितैः
बुधगुरुकविभिः स्पर्द्धांगर्द्धं गच्छेऽत्र बाभजति ॥५१॥

किं बाणः को मुरारि-
न कविकुलकलः सोऽचलो नाऽमरो वा
नाश्वासः कालिदासे
विलसति न गिरां चाऽपि हर्षे प्रकर्षः ।
भोजः सौजःप्रभो नो-
न च हरति मनो भारविर्नैव माघः ।
प्रेक्ष्यन्ते ऽस्मिन् विचित्रा
विशदमतिजुषः शंपुषश्चेत् कवीन्द्राः।५२।८॥

अथ प्रभावककवित्वानि ।

अत्र स्वप्रतिभाप्रकर्षपदवीप्रास्तप्रवीणप्रभा
बुध्वा पारगतागमेष्ववितथं सूक्ष्मार्थसार्थप्रथाम् ।
तत्त्वज्ञानलसत्प्रदीपनिहतध्वान्ताभमिथ्याधियो-
ऽनूचानादिमुनीश्वराः प्रवचनप्रावीण्यमाबिभ्रति ५३।१

अस्मिन् धर्मकथाप्रथास्ववितथप्रावीण्यलुभ्यत्प्रभा-
भ्राजन्ते निजदेशनानवरसैः पीयूषयूषोपमैः ।
कुर्वाणाः स्मृतिगोचरे सुमनसां श्रीसूरिमुख्यामहा-
लब्धीः पूर्वमुनीश्वरेषु विदिताः क्षीरास्रवत्वादिकाः॥५४॥

तर्कव्यासविलाससाधुविविधोपन्यासवात्याबलात्
प्रोद्धूतेद्धमदप्रवादिविदुरप्रोत्तालतूलव्रजा ।
भूपादिप्रकटप्रभावविभवा वादेषु लब्धप्रभा
भ्राजन्ते प्रतिभाऽभिभूतधिषणा नैकेऽत्र वादीश्वराः॥५५॥

भौमाभ्रादिभवन्निमित्तविदुराः सम्यक्श्रुताभ्यासतः
केचित् केऽपि च पात्रतामधिगताः सन्मन्त्रयन्त्रश्रियाम्।
सिद्धाभिस्त्वनवद्यहृद्यविलसद्विद्याभिरन्येऽधिका
नानाऽऽम्नायसमृद्धिभिस्तदऽपरे चूर्णादिसंवेदिनः॥५६॥

क्षीरांभोनिधिजिद्गभीरहृदये गूढस्वशक्तिश्रियः
प्रौढे च प्रविदर्श्यमानविभवाः सङ्घादिकार्यव्रजे ।
अस्मिन् शासनभासनैकनिरताः स्वाचारसंचारिणो
द्योतन्ते मुनिनायका भवभिया सावद्यमुक्तक्रियाः॥५७॥

॥ युग्मम् ॥ ४ । ५ । ६ ॥

दुष्टादृष्टजकष्टपिष्टपटुभिः षष्ठाष्टमाद्यैः सदा
सन्मासक्षपणादिकैश्च मुनयो बाह्यैर्विचित्रकर्मैः ।
एकाहं द्व्यहकं त्र्यहं च विहितोत्सर्गादिभिश्चान्तरै-
रस्मिन् शासनभासनं विदधते प्रौढैस्तपःकर्मभिः५८।७

सत्काव्यादिकलाकलापकुशलं संश्रुत्य येषां वचः
कारुण्यं दधते गुरौ सुमनसां प्राज्ञाः कवौ ज्ञेऽपि च ।
राजन्यावलिमौलिमौलिगमणीदीप्तांह्रयः सूरय-
स्तेनैकेऽत्र विभान्ति कोविदसभालङ्कारहारोपमाः५९।८।

प्रभावकैरेवमनुत्तरप्रभैरयं समग्रैरपि राजते गणः ।
न रत्नजाति खलु सा प्रजायते रत्नाकरं या समतीत्य-
वर्त्तते ॥ ६० ॥

गणे भवन्त्यत्र न चैव दुर्मदा-
नहि प्रमत्ता न जडा न दोषिणः ।
विदूरभूमिः किल सोषवीति वा
कदापि किं काचमणीनपि क्वचित् ॥६१॥

कस्मात् कस्माद्विनिर्गत्य हेतुभिर्विशदेतरैः ।

कलौ प्रशाखा प्रतिमा बभूवुर्बहवो गणाः ॥६२॥
प्रौढावदाततोऽयं तु प्राप्तोऽप्याह्वां नवां नवां ।
श्रीसुधर्मगणाधीशादारभ्याऽखण्डसन्ततिः ॥ ६३॥
आज्ञाभङ्गान्तरायोत्थाऽनन्तसंसारनिर्भयैः ।
सामाचार्योऽपि पाश्चात्यैः प्रायः स्वैरं प्रवर्त्तिताः॥६४॥
उपधानप्रतिक्रान्तजिनार्चादिनिषेधतः ।
न्यूनिता दुःषमादोषात् प्रमत्तजनताप्रियाः ॥६५॥
यत्तत्प्रासुकमिष्टाम्बुप्रवृत्त्यादिसुखावहाः ।
वीक्ष्यन्ते*ऽन्यगणेष्वत्राऽऽचरणा लक्षणोज्झिताः६६।
त्रिभिर्विशेषकम् ।
या श्रीवीरसुधर्माद्यैः प्रणीतास्वाऽऽगमानुगा ।
आचीर्णा स्थविरैः कालानुरूपयतनाश्रिता ॥ ६७ ॥
सामाचारी गणेऽस्मिंस्तु शुद्धा सैवास्त्यखण्डिता ।
परपम्परागता सर्वगणान्तरगताऽधिका ॥ ६८ ॥
॥ युग्मम् ॥
विनयानीहताक्षन्तिनैर्ग्रन्थ्यप्रमुखा गुणाः ।
दुर्लभा ये कलौ सर्वे तेऽपीक्ष्यन्तेऽत्र निर्मलाः॥ ६९॥

---

* वीक्ष्यन्ते चाऽन्यगच्छेष्वाचरणा लक्षणास्थिताःइत्यपि पाठः

अत एव मिथोधर्मस्नेहः सूरिवरादिषु ।
संविग्नेष्वाऽऽगमज्ञेषु गणबन्धोऽपि निस्समः॥७०॥

न स्वः कोऽपि परो वाऽत्र नैहिकोपक्रियापि च ।
तथाप्येनं भजन्ति ज्ञाः सर्वे ज्ञानक्रियोत्तरम्॥७१॥

अयमेव तदा सेव्यो मध्यस्थैः स्वाहितैषिभिः ।
उपेक्ष्य कुलगुर्वादिकदाग्रहहतान् जडान् ॥७२॥

मेयः कथं महिमवार्द्धिरयं गणेश-
श्रीदेवसुन्दरयुगोत्तमसूरिराजाम् ।
यत् पारगाणि न चिरादपि सन्मनांसि
यानि प्रयान्ति सुरशैलशिरोऽपि वेगात् ॥७३॥

एषां प्रभावकवरा विलसन्ति गच्छे
यद्वत्तथा नहि परेष्वपि शिष्यमात्राः ।
आबद्धमौलिमुकुटा इव चक्रिपुर्यां
पुंष्ठकुरा अपि न कर्बटकेषु दृश्याः॥७४॥

अहो रत्नत्रयीसैषामनर्घ्या काऽपि विष्टपे ।
रत्नकोटीरपि त्यक्त्वा यत्तामाददते बुधाः॥७५॥

एषां शुद्धवचःप्रबुद्धहृदया मन्त्रीशहेमादयो

निस्सङ्गः स्वजनादिषूज्झितगृहारम्भानवद्यक्रियाः ।
तैस्तैः स्वैश्चरितैरुदारललितैर्धर्मोपदेशामृतैः
प्रौढिं सङ्गमयन्त्यहो तदभयानन्दादिवच्छासनम् ॥७६॥
तदवासधर्मदार्ढ्यसङ्घपतिर्लल्लसूनुनाथाह्वः ।
गणधर्माऽऽधारकरः प्रभावको भाति नृपमान्यः॥७७॥
एषां नानागुणमणिनिचिते ऽपारगच्छाम्बुराशौ
दूरक्षिप्तातिचरणविलुठत्सङ्करे श्रीजयाढ्ये ।
उत्कल्लोले नवनवमहिमश्रीद्धशिष्यावदातैः
सर्वेप्यन्ये प्रदधति गणका कण्ठकूपोपमानम् ॥७८॥

चन्द्रलेखाच्छन्दः ।

सर्वतः प्रससरभांजि यशांसि
क्षीरनीरनिधयन्ति यमीनां ।
तानि तत्र परसूरिततीनां
शीकरावलिरिवाथ विभान्ति ॥ ७९ ॥
एषां परेषामथ सूरिराजां
चिकीर्षता विश्वकृता यशांसि ।
उन्मानबीजानि विचक्रिरे प्राक्

पूर्णेन्दुबिम्बं किल तारकाश्च ॥ ८०॥

एभिः स्फीतैः शशधरकिरणक्षीरडिण्डीरगौरैः
शुक्लाद्वैतं त्रिजगति गमिते स्वैर्यशोभिः प्रपूर्य ।
अन्येषां चेद्दरिवृतति तदा तल्लवानैव लभ्याः
सत्ता यस्माद्विरमति सरितां सिन्धुना सङ्गतानाम्॥८१॥

चन्द्रलेखाच्छन्दः ।

को ऽवेदयिष्यत् तुलनामतीतान्
श्रीगौतमस्वामिमुखानतीतान् ।
युगोत्तमाभा यदि नाभविष्यन्
निदर्शयन्तः स्वगुणैरिमे तान् ॥ ८२ ॥

वीरेण ये शासनधारका महा-
चार्याः स्वनिर्वाणपदादनूदिताः ।
एतेऽवगम्याः खलु ते गुणोच्चयै-
राज्ञैतदीयैव शिवाय तत्कृता ॥ ८३ ॥

एतच्च काव्यपञ्चकं प्राक् लिखितमप्याधिकार-
सौष्ठवात् पुनरिहापि लिखितमिति ।

श्रीवीरतोऽभूद्गणराट् ससप्त-

त्रिंशो बृहद्गच्छपसर्वदेवः ।

तस्माज्जगच्चन्द्रगुरुस्तपाह्वा

मूलं गणेन्द्रो नवमश्च४५ जज्ञे ॥ ८४ ॥

तस्माज्जयन्ति गुरवो गुरवोऽत्र षष्ठाः

श्रीदेवसुन्दरगणप्रभवोऽ ५० ऽधुनेमे ।

स्युर्द्वादशा१२श्च निखिलानधिकृत्यसूरी-

नेभ्योऽपि पञ्चकिलसप्तदशेति सर्वे ॥ ८५ ॥

एवं श्रीवीरजिनात् सन्ततिकृद्गच्छनाथगुरुगणने

एते स्युः पञ्चाशा५०आसन् बहवोऽन्तराले च ॥८६॥

त्रिपञ्चाशचतुष्पञ्चाशत्वाद्यपि भजन्त्विमे

श्रीसम्भूतजयानन्दादिगणेशक्रमाश्रयात् ॥ ८७ ॥

विश्वातिशायिमहिमाम्बुधयो जयन्तु

श्रीदेवसुन्दरयुगप्रवराश्चिराय ।

श्रीशासनोद्धरणधीरतमाः क्रियासुः

श्रेयःश्रियं सुविपुलां विपुलाङ्गभाजाम् ॥८८॥

श्रीवीरतीर्थकमले प्रवचनमातृप्रबुद्धदलकलिते ।

सूरैर्युगप्रधानैः प्रकाशिते महिमसौरभ्ये ॥ ८९ ॥

विलसन्ति राजहंसा यावत् श्रीसङ्घलोकमधुपाश्च ।
दुष्प्रसहान्ता तावत् सन्ततिरेषां चिरं जयतु ॥ ९० ॥

युगोत्तमानां गुणसिन्धुबिन्दू-
नादाय वाणीति कृता पवित्रा ।
मयार्जितं यत्किल तेन पुण्यं
ततोऽस्तु मे ज्ञानचरित्रशुद्धिः ॥ ९१ ॥

आमूलतः सुविहितावलिमौलिमौलि-
श्रीमत्तपागणनभोऽर्कगुरूत्तमानाम् ।
श्रुत्वा गुरुप्रभुमुखाद्ग्रथितेति किंचि-
दैतिह्यपङ्क्तिरमला गुरुगच्छभक्त्या ॥ ९२॥

रसरसमनुमितवर्षे १४६६ मुनिसुन्दरसूरिणा कृता पूर्वम्
मध्यस्थैरवधार्या गुर्वालीयं जयश्रीद्धा ॥ ९३ ॥

प्रायो गुरूणां मुखतोऽधिगम्या-
ऽन्यतोऽपि किंचिच्च विनिर्मितेयम् ।
यच्चाऽत्र किंचिद्वितथं बुधैस्त-
च्छोध्यं च मिथ्याऽस्तु च दुष्कृतं मे ॥९४॥

जगत्त्रयख्याततपागणस्य

शाखास्तुतेयं बृहती मयेति ।
किञ्चिच्च लघ्वी सकला अपीमाः
श्रीवीरमार्गानुगमा जयन्तु ॥९५॥

मूलं यस्य जिनेश्वरो गणभृतां स्कन्धोपमं मण्डलम्
शाखाः सन्ततयस्ततश्च यतीनां साध्व्यः प्रशाखाः पुनः।
श्राद्धाः पत्रगणाश्च मञ्जरितुलारूढाश्च सुश्राविकाः
सर्वाभीष्टफलप्रदः स जयति श्रीसङ्घकल्पद्रुमः॥४९६॥

इति श्रीयुगप्रधानावतारश्रीमत्तपागच्छाधिराजबृहद्ग-च्छनायकपूज्याराध्यपरमाप्तपरमगुरुश्रीदेवसुन्दरसूरिगण-राशिमाहिमाऽर्णवानुगामिन्यां तद्विनेयश्रीमुनिसुन्दरगणि-हृदयहिमवदवतीर्णश्रीगुरुप्रभावपद्महृदप्रभवायां श्रीमहा-पर्वाधिराजश्रीपर्युषणापर्वविज्ञप्तित्रिदशतरङ्गिण्यां तृतीये श्री गुरुवर्णनस्रोतसि गुर्वावलीनाम्नि महाहृदेऽनभिव्यक्तगणना एकषष्टिस्तरङ्गाः ॥

सम्पूर्णश्चायं श्रीगुर्वावलीनामा महाह्रदः ।

इति बृहत्तपागच्छश्रीगुर्वावली बृहती श्रीमुनिसुन्दरसूरिकृता।

॥ श्रीः ॥

# श्रीजैनयशोविजयग्रन्थमाला

## आ ग्रन्थमालामां प्रगट थयेलां संस्कृतपुस्तकोः—

## (१) प्रमाणनयतत्त्वालोकालङ्कार

आ पुस्तक न्यायनो एक अमूल्य ग्रन्थ छे, तथा जैन न्याय नी अन्दर प्रवेश करवामां तेमज पदार्थनुं यथा तथ्य स्वरूप समजाववामां आ ग्रन्थ एक अद्भुत भोमियो छे. माटे न्यायनी शरुआत करनार दरेक अभ्यासीने अत्यन्त उपयोगी थाय तेटला माटे ते सुन्दर ग्रन्थनी किंमत मात्र आना ८ राखवामां आवी छे. पोस्टेज जूदुं ।

---

## (२) हैमलिङ्गानुशासन

### (अवचूरि सहित)

आ पुस्तक श्री हेमचन्द्राचार्य विरचित छे, अने संस्कृत भाषाना अति कठिन शब्दोनुं तेमज तेना लिंग सम्बन्धीनुं ज्ञान, आ पुस्तक ना थोडा श्लोकोनुं अध्ययन करवाथी, स्वयमेव थइ जाय तेम छे. उपरान्त ते ग्रन्थनी रचना श्लोकमय होवाथी कंठाग्र करनारने सुगम थइ पडशे.

एकंदर आ पुस्तक घणुं उमदा छे.

छूटक किंमत आना ५ पोस्टेज जूदुं.

## (३) श्रीसिद्धहेमशब्दानुशासन (लघुवृत्ति)

## धातुपाठ सहित ।

कलिकाल सर्वज्ञ श्रीमद् हेमचन्द्राचार्य महाराजनो बनावेलो, महा चमत्कारी अने अल्प प्रयासथी अति बोधदायक आ व्याकरणनो ग्रन्थ खरेखर, संस्कृत विद्याना दरेक अभ्यासीने आशिर्वाद रूप छे. आ व्याकरणनो ग्रन्थ सर्व व्याकरणमां शिरोमणि छे, तेमज तेना अभ्यासकने बीजा कोइ व्याकरणनी अपेक्षा रहेतीनथी तेनी खातरी आ ग्रन्थनो अनुभव लेवाथी थया विना रहेशे नहिं. विद्यार्थिने सुगम थाय तेटला सारु धातुपाठनुं प्रकरण पण आपवामां आव्युं छे, आ ग्रन्थ अमूल्य छे छतां तेना कद्ना प्रमाणमां किंमत मात्र रु० २–८–० राखवामां आवीछे ते जुज छे, अने ते उपरान्त तेना ग्राहकने हैमलिंगानुशासन भेट आपवामां आवे छे । पोस्टेज जूदुं. ।

## (४) गुर्वावली

चरिम तीर्थंकर श्री महावीर स्वामीथी लइने दरेक तपागच्छना आचार्योनी क्रमवार पट्टावली अति मधुर भाषामां वर्णववामां आवेली छे. विद्वद्वर्य श्रीमन्मुनिसुन्दरसूरि विरचित आ ग्रन्थ संस्कृत श्लोकबद्ध छे. अने तेनो अभ्यास करवाथी दरेक पवित्र आचार्योना गुण, तथा चरित्रनो बोध थवा साथे काव्यनुं ज्ञान पण सहेज थइ शकशे. माटे ते ग्रन्थ दरेक जैन साधर्मि भाइए पठन करवा लायक तेमज खास संग्रह करवा लायक छे. किंमत आना ८ पोस्टेज जूदुं । इत्यलम् ॥

### मलवानुं ठेकाणुं

### श्रीयशोविजयजी जैनपाठशाला बनारस सीटी ।